॥ गायत्र्युपनिषत् ॥

॥ गायत्र्युपनिषत् ।

ॐ भूमिरन्तरिक्ष द्यौरित्यष्टावक्षराणि ।

अष्टाक्षर ह वा एक गायत्र्यै पदमेतदु हास्या
एतत्स यावदेतेषु लोकेषु तावद्ध जयति ।

योऽस्या एतदेव पद वेद ऋचो यजूषि सामानीत्यष्टाक्षर
ह वा एक गायत्र्यै पदमेतदु हास्या एतत्स यावतीय त्रयी विद्या
तावद्ध जयति ।

योऽस्या एतदेव पद वेद प्राणोऽपानो व्यान
इत्यष्टावक्षराण्यष्टाक्षर ह वा एक
गायत्र्यै पदमेतदु हास्या एतत्स यावदिद
प्राणिति तावद्ध जयति ।

योऽस्या एतदेव पद वेदाथास्या एतदेव तुरीय
दर्शित पद परोरजाय एष तपतीति यद्वै चतुर्थ तत्तुरीय
दर्शित पदमिति ददर्श इव ह्येष परोरजा
इति सर्वमु ह्येष रज उपर्युपरि तपत्येव ह वा एष
श्रिया यशसा तपति ।

योऽस्या एतदेव पद वेद सैषा गायत्री एतस्मिस्तुरीये
दर्शिते पदे  परोरजसि प्रतिष्ठिता तद्वै तत्सत्ये प्रतिष्ठित
चक्षुर्हि वै सत्य तस्माद्यदिदानीं द्वौ विवदमानावेयाता
अहमद्राक्षमहमश्रौषमिति ।

य एव ब्रूयादहमद्राक्षमिति तस्या एव श्रद्धव्या
य एतद्वै तत् सत्य बले प्रतिष्ठित तस्मादाहुर्बलसत्यादौ
ज्ञेय एव वैषा गायत्र्यध्यात्म प्रतिष्ठिता सा हैषा
गायस्तते प्राणा वै गायास्तान् प्राणास्तते उद्यद्गायस्तते
तस्माद्गायत्री नाम स यावेमामूमत्वा हैषैवमास
यस्मा इत्याह तस्य प्रमाण त्रायते ता हैके सावित्री-
मनुष्टुभमन्वाहुरनुष्टुभैतद्वाचमनुब्रूम
इति न तथा कुर्याद्गायत्रीमेवानुब्रूयाद्यदि ह वापि
बह्विव प्रतिगृह्णाति ।

इहेव तद्गायत्र्या एकचन पद प्रति य इमास्त्रीन् लोकान्
पूर्णान् प्रतिगृह्णीयात् सोऽस्या एतत्प्रथमपदमाप्नुयात्
अथ यावतीय त्रयी विद्या यस्तावत्प्रतिगृह्णीयात् सोऽस्या
एतद्द्वितीयमाप्नुयात् ।

अथ यावदिद प्राणिति यस्यावत् प्रतिगृह्णीयात् ।

तस्या उपस्थान गायत्र्यैकपदी द्विपदी त्रिपदीचतुष्पद्यपदा
सा न हि पद्यः यस्ते तुरीयायपदाय
दर्शिताय परोरजसे सावदोमिति समधीयीतन हैवास्मै
सकाम समृद्ध्यते ।

यस्मा एवमुपतिष्ठते ह मद प्रापमिति एतद्धवै तज्जनको
वैदेहो वुरिलमाश्रितराश्विमुवाच ।

यत्तु होतर्गा कथ हलीभूतो वहसीति ।

मुख ह्यस्या ससभ्रम विदाचकारेति होवाच तस्या
अग्निरेव मुख यदिह वापि वह्निमानग्नावभ्यादधाति
सर्वमेतत्स हत्येवविद्यद्यपवह्नीव पाप करोति
सर्वमेवैतत्सम्यग्विशुद्धो यतोऽजरोऽमरः स भवतीति ॥

इति गायत्र्युपनिषत् समाप्ता ॥